# श्रीहनुमत्कवचम्

श्रीबृहन्नारदीयपुराणे

सनत्कुमार उवाच ।

कार्तवीर्यस्य कवचं कथितं ते मुनीश्वर ।
मोहविध्वंसनं जैत्रं मारुतेः कवचं शृणु ॥ १॥

यस्य सन्धारणात्सद्यः सर्वे नश्यन्त्युपद्रवाः ।
भूतप्रेतारिजं दुःखं नाशमेति न संशयः ॥ २॥

एकदाहं गतो द्रष्टुं रामं रमयतां वरम् ।
आनन्दवनिकासंस्थं ध्यायन्तं स्वात्मनः पदम् ॥ ३॥

तत्र रामं रमानाथं पूजितं त्रिदशेश्वरैः ।
नमस्कृत्य तदादिष्टमासनं स्थितवान् पुरः ॥ ४॥

तत्र सर्वं मया वृत्तं रावणस्य वधान्तकम् ।
पृष्टं प्रोवाच राजेन्द्रः श्रीरामः स्वयमादरात् ॥ ५॥

ततः कथान्ते भगवान्मारुतेः कवचं ददौ ।
मह्यं तत्ते प्रवक्ष्यामि न प्रकाश्यं हि कुत्रचित् ॥ ६॥

भविष्यदेतन्निर्दिष्टं बालभावेन नारद ।
श्रीरामेणाञ्जनासूनोर्भुक्तिमुक्तिप्रदायकम् ॥ ७॥

अथ कवचम् ।

हनुमान् पूर्वतः पातु दक्षिणे पवनात्मजः ।
पातु प्रतीच्यामक्षघ्नः सौम्ये सागरतारकः ॥ ८॥

ऊर्ध्वं पातु कपिश्रेष्ठः केसरिप्रियनन्दनः ।
अधस्ताद्विष्णुभक्तस्तु पातु मध्ये च पावनिः ॥ ९॥

लङ्काविदाहकः पातु सर्वापद्भ्यो निरन्तरम् ।
सुग्रीवसचिवः पातु मस्तकं वायुनन्दनः ॥ १०॥

भालं पातु महावीरो भ्रुवोर्मध्ये निरन्तरम् ।
नेत्रे छायापहारी च पातु नः प्लवगेश्वरः ॥ ११॥

कपोलौ कर्णमूले च पातु श्रीरामकिङ्करः ।
नासाग्रमञ्जनासूनुः पातु वक्त्रं हरीश्वरः ॥ १२॥

पातु कण्ठे तु दैत्यारिः स्कन्धौ पातु सुरारिजित् ।
भुजौ पातु महातेजाः करौ च चरणायुधः ॥ १३॥

नखान्नखायुधः पातु कुक्षौ पातु कपीश्वरः ।
वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः ॥ १४॥

लङ्कानिभर्जनः पातु पृष्ठदेशे निरन्तरम् ।
नाभिं श्रीरामभक्तस्तु कटिं पात्वनिलात्मजः ॥ १५॥

गुह्यं पातु महाप्राज्ञः सक्थिनी अतिथिप्रियः ।
ऊरू च जानुनी पातु लङ्काप्रासादभञ्जनः ॥ १६॥

जङ्घे पातु कपिश्रेष्ठो गुल्फौ पातु महाबलः ।
अचलोद्धारकः पातु पादौ भास्करसन्निभः ॥ १७॥

अङ्गानि पातु सत्त्वाढ्यः पातु पादाङ्गुलीः सदा ।

मुखाङ्गानि महाशूरः पातु रोमाणि चात्मवान् ॥ १८॥

दिवारात्रौ त्रिलोकेषु सदागतिसुतोऽवतु ।
स्थितं व्रजन्तमासीनं पिबन्तं जक्षतं कपिः ॥ १९॥

लोकोत्तरगुणः श्रीमान् पातु त्र्यम्बकसम्भवः ।
प्रमत्तमप्रमत्तं वा शयानं गहनेऽम्बुनि ॥ २०॥

स्थलेऽन्तरिक्षे ह्यग्नौ वा पर्वते सागरे द्रुमे ।
सङ्ग्रामे सङ्कटे घोरे विराड्रूपधरोऽवतु ॥ २१॥

डाकिनीशाकिनीमारीकालरात्रिमरीचिकाः ।
शयानं मां विभुः पातु पिशाचोरगराक्षसीः ॥ २२॥

दिव्यदेहधरो धीमान्सर्वसत्त्वभयङ्करः ।
साधकेन्द्रावनः शश्वत्पातु सर्वत एव माम् ॥ २३॥

यद्रूपं भीषणं दृष्ट्वा पलायन्ते भयानकाः ।
स सर्वरूपः सर्वज्ञः सृष्टिस्थितिकरोऽवतु ॥ २४॥

स्वयं ब्रह्मा स्वयं विष्णुः साक्षाद्देवो महेश्वरः ।
सूर्यमण्डलगः श्रीदः पातु कालत्रयेऽपि माम् ॥ २५॥

यस्य शब्दमुपाकर्ण्य दैत्यदानवराक्षसाः ।
देवा मनुष्यास्तिर्यञ्चः स्थावरा जङ्गमास्तथा ॥ २६॥

सभया भयनिर्मुक्ता भवन्ति स्वकृतानुगाः ।
यस्यानेककथाः पुण्याः श्रूयन्ते प्रतिकल्पके ॥ २७॥

सोऽवतात्साधकश्रेष्ठं सदा रामपरायणः ।

वैधात्रधातृप्रभृति यत्किञ्चिद्दृश्यतेऽत्यलम् ॥ २८॥

विद्धि व्याप्तं यथा कीशरूपेणानञ्जनेन तत् ।

यो विभुः सोऽहमेषोऽहं स्वीयः स्वयमणुर्बृहत् ॥ २९॥

ऋग्यजुःसामरूपश्च प्रणवस्त्रिवृदध्वरः ।

तस्मै स्वस्मै च सर्वस्मै नतोऽस्म्यात्मसमाधिना ॥ ३०॥

अनेकानन्तब्रह्माण्डधृते ब्रह्मस्वरूपिणे ।

समीरणात्मने तस्मै नतोऽस्म्यात्मस्वरूपिणे ॥ ३१॥

नमो हनुमते तस्मै नमो मारुतसूनवे ।

नमः श्रीरामभक्ताय श्यामाय महते नमः ॥ ३२॥

नमो वानरवीराय सुग्रीवसख्यकारिणे ।

लङ्काविदहनायाथ महासागरतारिणे ॥ ३३॥

सीताशोकविनाशाय राममुद्राधराय च ।

रावणान्तनिदानाय नमः सर्वोत्तरात्मने ॥ ३४॥

मेघनादमखध्वंसकारणाय नमो नमः ।

अशोकवनविध्वंसकारिणे जयदायिने ॥ ३५॥

वायुपुत्राय वीराय आकाशोदरगामिने ।

वनपालशिरश्छेत्रे लङ्काप्रासादभञ्जिने ॥ ३६॥

ज्वलत्काञ्चनवर्णाय दीर्घलाङ्गूलधारिणे ।

सौमित्रिजयदात्रे च रामदूताय ते नमः ॥ ३७॥

अक्षस्य वधकर्त्रे च ब्रह्मशस्त्रनिवारिणे ।
लक्ष्मणाङ्गमहाशक्तिजातक्षतविनाशिने ॥ ३८॥

रक्षोघ्नाय रिपुघ्नाय भूतघ्नाय नमो नमः ।
ऋक्षवानरवीरौघप्रासादाय नमो नमः ॥ ३९॥

परसैन्यबलघ्नाय शस्त्रास्त्रघ्नाय ते नमः ।
विषघ्नाय द्विषघ्नाय भयघ्नाय नमो नमः ॥ ४०॥

महारिपुभयघ्नाय भक्तत्राणैककारिणे ।
परप्रेरितमन्त्राणां मन्त्राणां स्तम्भकारिणे ॥ ४१॥

var यन्त्राणां स्तम्भकारिणे

पयःपाषाणतरणकारणाय नमो नमः ।
बालार्कमण्डलग्रासकारिणे दुःखहारिणे ॥ ४२॥

नखायुधाय भीमाय दन्तायुधधराय च ।
विहङ्गमाय शर्वाय वज्रदेहाय ते नमः ॥ ४३॥

प्रतिग्रामस्थितायाथ भूतप्रेतवधार्थिने ।
करस्थशैलशस्त्राय रामशस्त्राय ते नमः ॥ ४४॥

कौपीनवाससे तुभ्यं रामभक्तिरताय च ।
दक्षिणाशाभास्कराय सतां चन्द्रोदयात्मने ॥ ४५॥

कृत्याक्षतव्यथाघ्नाय सर्वक्लेशहराय च ।
स्वाम्याज्ञापार्थसङ्ग्रामसख्यसञ्जयकारिणे ॥ ४६॥

भक्तानां दिव्यवादेषु सङ्ग्रामे जयकारिणे ।
किल्किलारवकाराय घोरशब्दकराय च ॥ ४७॥ var किल्किलाबुबुकाराय

सर्वाग्निव्याधिसंस्तम्भकारिणे भयहारिणे ।
सदा वनफलाहारसन्तृप्ताय विशेषतः ॥ ४८॥

महार्णवशिलाबद्धसेतुबन्धाय ते नमः ।

फलश्रुतिः ।

इत्येतत्कथितं विप्र मारुतेः कवचं शिवम् ॥ ४९॥

यस्मै कस्मै न दातव्यं रक्षणीयं प्रयत्नतः ।
अष्टगन्धैर्विलिख्याथ कवचं धारयेत्तु यः ॥ ५०॥

कण्ठे वा दक्षिणे बाहौ जयस्तस्य पदे पदे ।
किं पुनर्बहुनोक्तेन साधितं लक्षमादरात् ॥ ५१॥

प्रजप्तमेतत्कवचमसाध्यं चापि साधयेत् ॥ ५२॥

इति श्रीबृहन्नारदीयपुराणे पूर्वभागे बृहदुपाख्याने
तृतीयपादे हनुमत्कवचनिरूपणं नामाष्टसप्ततितमोऽध्यायः ॥ ७८॥